## ॥ 'अस्मत्कुलम्' इत्यस्य श्रीहरिरायाणां व्याख्या ॥

**नमः पितृपदांभोजरेणुभ्यो यन्निवेदनात् ॥**
**अस्मत्कुलं निष्कलंकं श्रीकृष्णेन आत्मसात्कृतम् ॥१॥**

अथ श्रीमदस्मत्स्वामिचरणाः स्वहृदयस्थायिभावात्मक प्रभु - त्रिभंगललितस्वरूपदिदृक्षार्तितापभरेण स्थातुम् अशक्ताः कापि इदृशं रूपं प्रियं मां दर्शयति इति भावेन तथाविध - विविधरसभावात्मकं स्वरूपं निरूपयितुं भक्तिरूपतया भगवदाविर्भावहेतुन् निजाचार्यचरणरेणून् मंगलसिद्धये प्रथमं नमस्यन्ति **नम** इति. **पितृपदांभोजरेणूभ्यो नमः** अस्तु इति सम्बन्धः. एतन्नमनस्यापि तत्कृपामात्रसाध्यत्वं न स्वकृतिसाध्यत्वबोधनाय 'नमामि' इत्यादि क्रियापदम् अपहाय **'नमः'** शब्दप्रयोगः. अयं नमस्कारः तदर्थकएव न फलान्तरार्थक इति ज्ञापनाय संप्रदानत्वबोधक **'रेणुभ्यः'** इति चतुर्थ्यन्तपदप्रयोगः. ननु नमने कः सम्बन्धः इति आकांक्षायाम् आहुः. **पितृ** इति. पातीति पिता. तथाच सर्वभावेन स्वरक्षकत्वात् तथा इति भावः. ननु एवं सम्बन्धे तन्नमनमेव उचितं **न** चरणरेणूनाम् इति चेत् तत्र आहुः **पदांभोज...** इति. तत्रहि भक्तेरेव अपेक्षा नान्य साच पदात् भक्तिरूप(?स्य!) निवेदनादेव भवतीति तथोक्तिः.

ननु भक्तिरपि द्विविधा मर्यादापुष्टिभेदेन. तत्र परा सर्वैन्द्रियास्वाद्यरसा. पूर्वा मुक्तिसाधकत्वेन अतथाविधा, आत्ममात्रेण तत्र आनंदानुभवात्. तथाच 'पदाद्' अपूर्वेव सा भविष्यति इति आशंक्य आहुः **अंभोज** इति. तस्य सर्वैन्द्रियास्वाद्यत्वं लोकसिद्धम्. तथाच तादृशभक्तिरूपात् ततः पुष्टिभक्तिरेव सेत्स्यति इतिभावः. ननु एतादृक्पदकमलनमनत्वात् तद्रेणुनमने को हेतुः इति चेत् तत्र आहुः **रेणूभ्यः** इति. रेणवोहि सततसमाश्रितत्वेन तत्सम्बन्धित्वेन भक्ताइव तत्रापि रजोरूपत्वेन दैन्यभावतः परमकृपालवः तएव भक्तिप्रदाः. पदांभोजन्तु भक्तिरूपम् इति तद्दायकाधीनम् इति तन्नमनम् इत्यर्थः. यद्यपि एकेनैव रेणुना कार्यसिद्धिः तथापि बहुवचनम् एकस्मिन्नेव



जात्यपेक्षया महत्त्वसूचनाय. अथवा, तेषाम् अनन्तत्वात् बहुभ्यो नमने तन्मध्ये अस्मद्दैन्यम् अवलोक्य कोपि कृपां कुर्याद् इति अभिप्रायेण तथोक्तिः इति भावः.

यद्वा. अलौकिकमेव उपयोगिशरीरसंपादनं हि तत्कार्यता नैकेन तेन सिद्ध्यति इति तथा इत्यर्थः. अन्यद्वा, बहुभ्यो नमनं स्वदैन्यातिशयद्योतनाय. एतेन एतच्चरणसम्बन्धित्वमात्रेण सर्वेषाम् एकरूपतया मान्यत्वम् इति निरूपितम्. नमनन्तु अन्यस्य एतादृशेषु कर्तुम् अशक्यत्वाद् इति बहुधोक्तम्. आदावेव तदुक्तिस्तु दैन्यभावस्य सार्वदिकस्फूर्त्यभिप्रायेण. एवं निःसाधनसाधनं नमनम् इति अभिप्रायः.

पदांभोजरजोमहत्त्वम् आचार्यमाहात्म्येनैव इति तदसाधारणमाहात्म्यम् आहुः **यन्निवेदनाद्** इति. **येषां** प्रसिद्धानां सर्वत्र निजाचार्याणां साक्षादाविर्भूते भगवति भावात्मके पुरुषोत्तमे पुरःस्थिते कृष्णसात्कृतप्राणानां **निवेदनं** सर्वसमर्पणं तस्मादेव साधनान्तराभावेऽपि **समर्पणविषयत्वेन अस्मत्कुलम्** अस्मत्सजातीयस-मूहरूपम् अखिलं **निःकलंकम्. कलंकः** साक्षात्पुरुषोमासम्बन्धित्वं त इति तमासित् (?). जीवानाम् अक्षरांशानां तद्वारैव पुरुषोत्तमसम्बन्धयोग्यत्वात्. अतएव प्राह प्रभुरेव गीतायां **''ते प्राप्नुवन्ति मामेव''** (भग.गीता.१२।२) इति.

अथवा, येषु आचार्येषु निवेदनकथनं ''यदि अस्माकं भवन्तो अस्मदंगीकृतिं कृपया कारयन्तु'' इत्येवं रूपं तस्माद् अस्मत्कृताद् आचार्यप्रार्थनारूपाद् अस्मत्कुलम् अखिलम् तथा इत्यर्थः. यद्वा, **कलंकं** आचार्यकुलोत्पन्नानां कालाद्यन्यसम्बन्धित्वं तद्रहितम् इत्यर्थः.

अथवा. **कलंकं** शरीरादीनां कालप्रवाहपतितानां प्राकृतत्वेन दुष्टत्वात् साक्षात्कृष्णसेवाकृत्ययोग्यत्वं तदभावो अत्र बोध्य इत्यर्थः. **अस्मत्कुलम्** इत्यत्र स्वसम्बन्धवाचकत्वेन **अस्मच्छब्देन** कुलेऽपि स्वसम्बन्धिनामेव तथात्वं सम्बन्धाभावे न इति आशयो निरूपितः.

सम्बन्धस्तु अत्र भावात्मकैव मुख्यो ग्राह्यो न जननादिरूपः. अन्यथा विस्फुलिंगन्यायेन अक्षरतः समुत्पन्नानां सर्वेषामेव जीवानां तत्सम्बन्धित्वेन दैवासुरविभागो न स्यात्. भावदोषादेव आसुरत्वं सम्बन्धस्तु तुल्यः. सच बन्ध-मोक्षाभ्यां प्रपञ्चे चिक्रीडिषोः प्रभोरिच्छयैव इति. अतएव उक्तं प्रभुणैव **''क्षिपाम्यजस्रम् अशुभान्''** (भग.गीता.१६।१९) इति. अतएव च भावात्मकएव सम्बन्धो मुख्यः इति तमेव विधातुं पुनर् निवेदनम्. अन्यथा ''यूयं भगवददुत्पन्नाः ततो वियुक्ता अविद्यया गृहिताः. प्रपञ्चं विस्मृत्य पुनः तमेव स्मरथ'' इति ज्ञानमेव उपदिशेयुः. तेन कुलेऽपि यत्र फलदित्सा तत्र स्वभावसम्बन्धं सम्पाद्य फलं प्रयच्छति, यत्र तदभावः तत्र न तथा इति बोध्यः. जननसम्बन्धस्तु न तथाविधः. अतएव सत्स्वपि प्रद्युम्नादिषु उद्धवस्यैव मुख्यत्वोक्तिः **''न उद्धवो अण्वपि मन्युन''** (भाग.पुरा.३।४।३१) इत्यादिना.

ननु पूर्वोक्तकलंकनिवृत्तौ कः प्रकारः इति आकांक्षायाम् आहुः **श्रीकृष्णेन आत्मसात्कृतम्** इति. आचार्यवर्य-तदात्मजविहितनिवेदनाभ्यामेव **श्रीकृष्णेन** प्रकटसदानन्देन **आत्मसात्** स्वस्वरूपाधीनं नतु धर्माधीनं पुष्टौ अंगीकारात् कृतम् इति तथा इत्यर्थः. एतेन महापुरुषद्वारैव अधुना अंगीकृतिः इति निरूपितम्. अतएव उक्तं निरोधलक्षणे **''महतां कृपया यावद् भगवान् दयविष्यति''** (निरो.ल.४) इति. तथाच अन्यकारिनिवेदनेऽपि तएव कारयन्ति इति भावेन तत्कारणे फलसिद्धि न अन्यथा इति भावः.

अथवा विपर्ययेण अत्र विशेषणविशेष्यभावो अवगन्तव्यः. तथाहि : आचार्यनिवेदनाद् **यत् कृष्णेन आत्मसात्कृतम्** अन्याविनियोगेन केवलं स्वोपयोगितयाः स्वाधीनं कृतं तदेव **अस्मत्कुलं** अस्माकं तत्रैव स्वीयत्वबुद्धेः. अतएव दृष्टः प्रभुषु पुत्रादेरपि प्रभुसेवाऽतत्परस्य परित्यागो हृदाच उक्तः च तथैव अस्मदाचार्यैः निरोधलक्षणे **''पुत्रे कृष्णप्रिये रति''** (निरो.ल.१८) इति. **निष्कलंकं** च तदेव प्रभुसम्बन्धेनैव पूर्वोदितदोषनाशात् सेवोपयोगित्वेन आत्मसात्करणाय युक्तत्वं कृष्णे निरूपितम्. भक्तसहितस्यैव



प्रभोः सेवाकृत्यपेक्षत्वात् सेवायाअपि भावरूपत्वज्ञापनाय **'कृष्ण'**पदम्. स्वरूपस्य भावात्मकत्वेन आन्तरत्वज्ञापनाय **'आत्म'**पदम्.

एवं यथोचितं मंगलाचरणं विधाय उपक्रान्तस्वरूपनिरूपणं कर्तुं तस्य पुष्टिमार्गीयत्वद्योतनाय वामप्रकारेण तत्स्वरूपं निरूपयन्ति. **वामजान्वंत** इति. अत्र हि स्वसखिसन्निधौ आगत्य आर्त्या हृदयस्थितस्य बहिर्दिदृक्षार्तिभराकुलतया प्रदर्शय एतादृशं रूपम् इति वदन्तइव स्वहृदयस्थितं त्रिभंगललितं तत्स्वरूपं पुरुषत्वात् प्रभोः पदयुगलम् आरभ्य वर्णयन्ति. तत्र प्रथमं पदद्वयं वर्ण्यते **वामजान्वंत** इत्यारभ्य **प्रकटयति प्रेमवल्लभ्यम्** इत्यन्तेन श्लोकत्रयेण. **वामं** सुंदरं कदाचिदेव लीलाविशेषे आवरणापसारणेन अतिदुर्लभावलोकनतया सुन्दरत्वेपि अन्यांगानाम् इदं तथा. अथवा **वामं** वक्रं भगवतोपि अंग त्रिभंग (अग्रे त्रुटिता भाति)

**इति श्रीहरिदासोदिता**
**ललितत्रिभंगग्रन्थीयप्रथमश्लोकव्याख्या संपूर्णाः.**

---

**(मातृकासंग्रहः)**

**१. कामवन.**

